# दिव्यज्योतिः

संस्कृतस्य मासिकपत्रम्





अधुनाहं — अतीव दुःखमनुभवामि यत् मया बाल्यकाले संस्कृतं न पठितम् । संस्कृताध्ययनं बिना भारतस्य महत्त्वमेव नास्ति । प्रत्येकभारतीयबालकेन संस्कृतमवश्यमेव पठनीयम् ।

— महात्मा गान्धी



भारतराष्ट्रपतयः श्री डा० स० राधाकृष्णन् महाभागाः
२ अक्तूबर ६६ दिवसे भारतराजधान्यां अ० भा० स० साहित्य
सम्मेलनस्य स्वर्णजयन्ती समारोहस्य— उद्घाटनं करिष्यन्ति ।

वार्षिकमूल्यं ६) रु० ★ सितम्बर १९६६ ★ अस्याङ्कस्य ६२ पसकाः

दिव्यज्योतिः { शिमला
वर्षम् १० : आश्विन : २०२३ अङ्कः-१२
( संस्कृतमासिकम् )

## GOVERNMENT RECOGNITION

Divya Jyoti stands approved for Educational Institutions and Libraries by the Education Departments of the following States in India as under :—

1. PUNJAB *vide* No. 2296-220-57-B-38681, dated 5-7-57 and Memo. No 21-60 B. Sanctioning compulsory purchase of the magazine.
2. HIMACHAL PRADESH, *vide* No. E-7-32 dated 23-10-63
3. JAMMU & KASHMIR, *vide* No. G-476-91, dated 18-4-57.
4. MADHYA PRADESH, *vide* No. 2109, P. P. dated 21-8-59.
5. RAJASTHAN *vide* EDB/AB/2/14246/29k60, dated 4-1-961.
6. MAHARASHTRA *vide* S–102/563–H dated 19-5-19651.
7. UTTER PRADESH, Vide No 8264-2203; 18-82 65-66 dated 24-2-66.

*A reliable medium to subscribe, represent or Advertise.*

अस्याङ्कस्य लेखकाः :-

★ वैद्यः श्री रामस्वरूप शास्त्री, सम्पादकः बाल संस्कृतम्, बम्बई ★ वि० भू० श्री गणेशराम शर्मा राजस्थानम् ★ श्री भगवान् शरण भरद्वाजः 'प्रदीपः' संस्कृति संस्थानम् ख्वाजा कुतुबः बरेली (उ० प्र०) ★ श्री प्रेमशङ्कर मिश्रः सुभाषगंज, इटारसी (उ. प्र.) ★ श्री हजारी लाल शास्त्री, विद्यालङ्कार, रोहतक (पं)

## संस्थापकः तथा प्रधानसम्पादकः

विद्यावाचस्पतिः, आचार्य दिवाकर दत्त शर्मा, शास्त्री, काव्यतीर्थः, साहित्याचार्यः, विद्यालङ्कारः प्राचार्यः (प्रिन्सिपल, सं० का०) शास्त्रप्रवक्ता (अ० भा० आकाशवाणी)

## सम्पादकः

कविरत्न प्रा० केशव शर्मा, शास्त्री, साहित्यरत्नम्, एम० ए०

## प्रकाशकः

'दिव्य-ज्योतिः' कार्यालयः 'आनन्दलॉज' जाखू, शिमला-१

भवानी स्टीरियोटाइपिक प्रेस शिमला द्वारा मुद्रितम्, सम्पादक तथा अधिकारी, "दिव्यज्योतिः" आचार्य दिवाकर दत्त, द्वारा आनन्दलोज जाखू शिमला—१ तः प्रकाशितम्

# भातु भारतम्



(१)

मुनिभिरर्चितं देवपूजितं श्रुतिभिरूर्जितं शास्त्रचर्चितम् ।
प्रकृतिभूषितं ज्ञानसुन्दरं धर्मगौरवं भातु भारतम् ॥

(२)

सुरसरित्तटं सिन्धुशोभितं रुचिरपर्वतं कान्तकाननम् ।
कृषकसङ्कुलं सस्यश्यामलं विपुलगोव्रजं भातु भारतम् ॥

(३)

विविधबोधदैः सूरिभिश्चितं विमलबुद्धिभिर्ज्ञानिभिर्युतम् ।
विततकीर्तिभिः कोविदैः स्तुतं करुणमानसं भातु भारतम् ॥

(४)

हरिनिषेवितं रामपावितं मुरधराञ्चितं व्यासवर्णितम् ।
त्रिदशगोगुरुब्राह्मणप्रिय रचितराष्ट्रकं भातु भारतम् ॥

(५)

विदितसंस्कृतं ख्यातकौशलं विभवमण्डितं त्यागपण्डितम् ।
प्रयतमानुषं स्वर्णभूतलं सकलसुन्दरं भातु भारतम् ॥

(६)

निहितपाकिकं चीनजित्वरं निरतरूसकं स्वस्य रक्षकम् ।
विपुलसम्पदं धर्मतत्परं प्रथितविक्रमं भातु भारतम् ॥

(७)

सरलसूनृतं ग्राम्यजीवनं परमभावुकं भव्यमन्दिरम् ।
अनघकेतुकं स्वीयशासनं भुवनवन्दितं भातु भारतम् ॥

—वैद्यः रामस्वरूप शास्त्री

# केषांचित् संस्कृतपत्रकाराणां पत्राणि (१)

विद्याभूषणं श्रीगणेशरामशर्मा,



श्रेष्ठाः संस्कृत—पत्र पत्रिकाणां पाठकाः ?

जानन्त्येवात्र भवन्तो भवन्तः सहृदयधुरीणा विदितवेदितव्या यद्धि संस्कृत-पत्रकारिताया विकासोऽधुना शैशवमतीत्य कौमारे वयसि वर्तमानोऽस्तीति तदत्रास्याः संस्कृत-पत्रकारितायाः नवयुगानुरूपं वाञ्छनीयं विकासं सम्यक् साधयितुं, तस्याः सर्वाङ्गीणोन्नतये, प्रगतये च तत्तत्तत्वानां सुसूक्ष्ममवलोकनं, मार्मिकमालोचनं, गुणवत्पोषणं, व्यापकं प्रकाशनं, परिचयादिकञ्चातीवावश्यकं, परमप्रयोजनीयमिति समर्थयेरन् भवन्तः सर्वे नवयुगीनदेशकालपरिस्थितिविदो मार्मिकाः। पत्रकाराणां, सम्पादकप्रवराणां, प्रख्यातयशसां वरिष्ठलेखकानां, कविपुङ्गवानां, साहित्यसेवकानां च पत्राणि तावत् किमप्यपूर्वमेव महत्त्वं दधति। अमरीका—इङ्गलैण्डादिषु देशेषु तु महामहिमशालिनां क्रान्तदर्शिणां, क्रान्तिकारिपरिवर्तनविधायकानां तेजस्विनां पत्रकाराणां, सुप्रसिद्धानां समर्थानाम् सम्पादकाचार्याणां, प्रतिभावतां महालेखकानां च कानिचिदुपयोगीनि, मार्मिकाणि च पत्राणि लोकाः संगृह्य प्रयत्नशतैः संरक्षन्ति, प्राप्तकालं प्रकाशयन्ति च। भारते चात्रास्माकं देशेऽपि च सर्वभाषासु पत्रकारित्वेन तपस्तप्यतां, तद्विषयकं कार्यं सम्पादयतां सम्पादकानां, साहित्यसेवां विदधतां केषांचिन्महालेखकानां च पत्राणि तत्सुहृन्मित्रैः सहयोगिभिः कार्यकृद्भिः पाठकैश्च प्रसङ्गोपात्तमवसरोपयुक्तं च प्रकाश्यन्त एव समसामयिकीषु पत्रपत्रिकास्विति न परोक्षं सचेतसां विविधभाषापत्रपाठकानां भवताम्। हिन्दी-बंगवीगुर्जरी-महाराष्ट्री—प्रभृतीनां भाषाणां पत्रसम्पादकानां पत्रव्यवहाराः प्रकाश्यन्त एव सम्पादकैर्लेखकैः पापठ्यन्ते च पाठकैः प्रबुद्धैः। इत्थंविधैः प्रयोगैः परिपक्वानुभववतां भुक्तभोगानां श्रमशीलानाम्, निखिलाः स्वजीवनमहत्त्वाकाङ्क्षाः समस्तमपि पुरुषार्थं, बौद्धिकीं मानसीं योग्यतां च पत्रकारित्वे, लेखकत्वे, साहित्याराधने वा समर्पयतां तेषां महात्मनां महाप्राणानां धैर्यधनानां स्वजीवने प्राप्तैः कटुमिष्टमिश्रैरव्यभिचारिभिः प्रौढैरनुभवैः सम्पादकाः लेखकाः पाठकाश्च स्वसाधनायां लाभान्विता भवन्ति। तेषां सर्वेषां तपस्विनां तपस्त्यागकर्मठत्वोद्योगाध्यवसायन्यायप्रियतासिद्धान्तदृढताभिस्तैर्गुणगणैरखिलैर्नवाभ्यासिनामत्र कर्मणि प्रवर्तमानानां बोधपाठोपलब्धिर्भवति, तत्कीर्तिरक्षणं च भवति नाम नूनम्। स एष पत्रप्रकाशनक्रमः सावधानतयोपक्रान्तोऽनन्तः श्लाघ्य एवेति न कस्यापि विप्रतिपत्तिः।

सत्यप्येवं संस्कृतभाषायाः पत्रकारिताक्षेत्रे चिराय सम्पादनकर्मयोगं ससाधयतां, तथाविधासु प्रवृत्तिषु क्षपिताखिलजीवनानां, सुदृढ़पुरुषार्थवतां, मतिमहतां सतां विपश्चितां, सपरिश्रमं तपस्यतां सम्पादकप्रवराणां, महालेखकानां, ग्रन्थकाराणां, महाकवीनां, नवीनगद्यशैलीपरिष्कर्तॄणां स्वयुगीनानां जीवतां, लोकान्तरं गतानां वा पत्रप्रकाशनं नेदानीं यावत् संस्कृतपत्रपत्रिकाणां स्तम्भेषु विलोक्यते। तत एवाद्य विषयमिममधिकृत्य प्रवर्तते मम लोहलेखनीयम्। आशास्यते, विषयोऽसौ नवविधादृशा न केवलं पाठकेभ्यो रोचक एव स्यादपितु सर्वेषां संस्कृतपत्रसम्पादकानां पाठकानां च

लाभायानन्दाय यशसे श्रिये पथप्रदर्शनाय च भवेदवश्यम् ।

अद्य तावदादौ पङ्क्तीनामासां लेखकेन सह सम्पादकीयकर्तव्यधिया संसाधितपत्रव्यवहाराणां तत: क्रमशो जातघनिष्ठसम्पर्काणां, पर्यन्ते मैत्रीभावमुपगतानां, स्वर्लोकं प्रयातानां, सुविख्यातपत्रकाराणां 'मधुरवाणी – पत्रिकाया: सम्पादकप्रवराणां बेलगांव (कर्णाटक) इति स्थाने कृतवसतीनां सुगृहीतनामधेयानां, संस्कृतसाहित्यभूषणादिनानोपाधिविरुदविभूषितानां, सम्पादकोत्तमानां बुर्ली श्रीनिवासाचार्याणां कानिचिन्मार्मिकाणि पत्राणि प्रकाशनायोपन्यस्यन्ते ।

अथेयमित: प्रायेण पञ्चत्रिंशद्वर्षेभ्य: पूर्वतनी संकथा । तदानीमहं "श्री महारावल-हाई-स्कूल, डूंगरपुर" इति शिक्षासंस्थायां संस्कृत-विषयस्याध्यापनाय संस्कृत-प्रधानपण्डितपदे नियुक्त: स्वनियोगं परिपालयन्नासम । 'मधुरवाण्या' ग्राहकत्वेन, संस्कृतभाषाया लेखकत्वेन च वैकुण्ठधामाश्रितै: सम्पादकाचार्यैर्बुर्ली श्री–निवासाचार्यवर्यै: साकं मम पत्राचारा: सन् १९४० ई० वर्षतोऽपि पूर्वमुपक्रान्ता आसन् परन्तु सन् १९४६ ई० वर्षे यदा मया—"श्री महारावल-रजत-जतन्त्यभिनन्दनग्रन्थस्य" सम्पादनकार्यमारब्धम् ततस्तु द्वयोरावयो: परस्परं पत्र लेखनक्रमो निरन्तरं ववृधे ।

दृश्यतां तावन्महाभागानामेतेषामेकं पत्रम्

मधुरवाणी-कार्यालय:,
बेलगांव (कर्णाटक)
३१ अगस्त ४७

श्रीमत्सु प्रियसुहृत्सु गणेशरामशर्मसु सप्रणाममावेदनम् यच्चिराय भवत्पत्रमवलोक्य प्रहर्षस्य परां कोटिमधिरूढा: स्मो वयम्, मधुरवाण्या अग्रिमेंके भवतां स्वातन्त्र्योत्सवलेख: प्रकाश्यते द्वादशवर्षीयश्चतुर्थोंक: भवद्भिरवलोकित: । पंचमश्च पंचदशाहेभ्य: प्रागेव सम्पन्न: । तदवसरे अखिल भारतीय सं० सा० सम्मेलनप्रदर्शनविषयको द्वादशपृष्ठात्मक एको लेखोऽवश्यमस्मिन्नेवांके प्रकाश्य इति मुंबापुरस्थसुहृद्वर्यात्प्राप्त: । स्वातंत्र्योत्सवनिमित्तेन दिनचतुष्टयं विश्रामश्च गृहीत: कर्मकारै: । तथापि द्वित्रिदिनाभ्यंतरेणेतस्सोंक: प्रेष्यते ग्राहकसविधे, षष्ठांकोपि असमाप्तमुद्रण इव तत्रैव भवल्लेखस्यावकोशो दीयते, भवतां देशे सुखं शांतिश्च स्यादिति भावयामो हृष्यामश्च, पंचांम्बुवृत्तेनोद्विग्ना वयमतितराम्, सर्वेश्वर: करुणावरुणालय: शांतिं ददातु, भवद्भि: प्रकाश्यमानं यत्पुस्तकमासीद् यदर्थे च वयं लेखान् प्राहिणुम तस्य किं वृत्तमिति जिज्ञासा कुतुहलिनो वयम्, अतस्त्वरया विषयमिमं निवेद्य प्रीणयंतु न: । तथा च समये पत्रोत्तरप्रेषणेन लेखप्रेषणेन परं प्रीणनीया वयं मधुरवाणी चेत्यलम् ।

बुर्ली श्रीनिवासाचार्य:

एकमपर पत्रमपि चावलोक्यताम्—

मधुरवाणी–कर्यालय:,
बेलगांव (कर्णाटक)
२०–१०–४७

श्रीमत्सु पण्डितप्रवरेषु ज्योतिषाचार्येषु प्रणामा: । श्रीमतां पत्रमवलोक्य परं प्रसन्नहृदया: स्म: । प्राक् प्रकाशितस्य लेखस्य पंच पृथक् संचिका न प्रकाशिता: । मुद्रणावसरे तथा बोधिता अपि कर्मकरा: पृथङ्मुद्रणं व्यस्मरन्, तदथ पंचांका एव प्रेषणीया भविष्यन्ति, अधिका अंका न प्रकाश्यंते सर्वथा अत्यवश्यमपेक्ष्यंते चेत्पंचांकान् प्रहिणुम: । सर्वथा लेखान् प्रेषयंतु संततम् । तान् प्रकाशयितुं सन्नद्धा भवदीया मधुरवाणी आधुनिकपरिस्थितिप्रदर्शनपरा लेखा वाचकप्रीतये स्युरिति बहूनामभिप्राय: । अत: श्रीमन्तस्तत्रभवंस्तत्तादृशांल्लेखान् विलिख्य प्रेषयंतु । पाकिस्तान प्रदेशतो निर्वासिता बहवो राजपुत्रस्थानं प्रविष्टा इति शृणुम: । भवतां प्रदेशस्तादृशो न वा इति न जानीम: । निर्वासितानुभवादर्शरूपा लेखा भवदभिप्रेताश्चेत् प्रेषयंतु तादृशान् अथवा भवदभिप्रेता यादृशा वा भवेयुस्तादृशांल्लेखान प्रेषयंतु सांप्रतिकस्थितिचि-

त्ररूपाश्चेत् वरमित्यस्माकमभिप्राय: । भवन्महाराजरजतजयंती स्मारकग्रन्थो मुद्रितो न वा तत्रास्माकोनास्त्रयो लेखा: प्रकटिता न वा इत्येतत् स्पष्टतया निरूप्यास्मान् प्रहर्षयंतु अपि च ग्राहकान् मित्रेषु संपाद्य वाणीं प्रीणयंतु समये पत्रोत्तराणि संप्रेष्य प्रहर्षयंतु इत्यलम् ।

बुर्ली श्रीनिवासाचार्य:

पत्रस्यास्योत्तरे यत्पत्रं सुविस्तृतं मया लिखितम् महाभागेभ्योऽमीभ्य: श्री निवासाचार्येभ्यस्तदपि सन्दर्भज्ञानायाधस्तादविकलमत्रावतारयाम:—

श्री महारावल-हाई-स्कूल,<br>डूंगरपुर स्टेट (राजपूताना)<br>ता० २५ अक्टूबर १९४७

मधुरवाणी-सम्पादकप्रवरा:<br>श्रीमन्तो बुर्ली श्री निवासाचार्यवर्या:,<br>बेल गांव (कर्णाटक)

महाभागा: !

श्रीमत्करकमलाङ्कितं ८८५ संख्याकं आश्विन-शुक्ला ६, संवत २००४ ता. २०-१०-४७ दिने लिखितं कृपापत्रं हस्तगतमास्ते ।

इदानीं यावत् मधुरवाण्यां प्रकाशितानां मल्लेखानां पृथङ् मुद्रितानि पृष्ठानि कर्गलानाम् (Reprints) प्रेषितुं नाशक्नुवन् भवन्तस्तेन न कापि दुर्भरा क्षतिरजायत । यदि मधुरवाण्या: सुभाषाङ्कस्य, ६ षष्ठाङ्कस्य द्वादशवर्षस्य च काश्चित् संचिका: कार्यालयेऽवशिष्टा: स्यु:, कार्यालयस्य च नाधिका कापि क्षतिर्यदि भवेत्तदा प्रोक्तयोर्द्वयोरपि अङ्कयोर्द्विस्त्रिश: संचिका मह्यं भूयो दानाय प्रसीदन्तु ।

भविष्यति मधुरवाण्यां प्रेषितस्य मे प्रत्येकस्य लेखस्य पंच पृथङ् मुद्रितपत्राणि (outprints) नूनं प्रेषयितुं प्रतिजानन्तु महाभागा: । समयेनानेन लेखकानां स्वलेखप्रतिसंग्रहणे सौविध्यं भवति तस्मादेव हि प्रार्थयामहे पुन: पुन: । भविष्यति कार्यकरा: सावधाना अत्र विषये क्रियन्ताम् ।

अद्य – "संस्कृतविदुषामात्मकथा जीवनचरितानि च" इति शीर्षको लेख: समुपस्थाप्यते भवत्सेवायां मधुरवाण्यां प्रकाशनाय । तत्प्राप्ति सूचयन्तु लेखं च संशोधनपुरस्सरं प्रकाशयन्तु यदि रोचेत । लेखसंशोधने, तत्परिवर्तने, परिवर्द्धने वा भवन्त: कृतविद्या: सम्पादकमहानुभावा: स्वयमधिकारिण: सन्त्येव । नात्र सङ्कोचशीलैर्भाव्यं भवद्भिर्यतो-

'गच्छत: स्खलनं क्वापि भवत्येव प्रमादत: ।'<br>लेखाश्चाशुद्धा न प्रकाश्येरन्नित्यवधार्यम् ।

अस्मत्प्रदेशोऽयं मेदपाटदेशसंलग्न: । रेलगन्त्री सर्वदिक् त्रिंशत्क्रोशान् यावत् दूरा भिल्लानामेव वसति: प्रायोऽधिका । जनसंख्या चात्रत्या पादोनत्रिलक्षसंख्याका । सूर्यवंशीयक्षत्रियाणां मेदपाटेश्वराणामेव कुलजा: क्षत्रा अत्रत्या राजानो, राजधानी चेयं डूंगरपुरम् । राजाश्रयादेव हि लोकानां जीवनधारणवृत्तिरथवा कृषिकर्म केवलम् । नगरे वसतां जनानां राज्यसेवा एव प्रधानो व्यापार: । राज्यस्य वार्षिकायस्त्रिशल्लाक्षानुमान: । ब्राह्मणा एवात्र प्रधाना: सुशिक्षिता नागरिका: ।

मेदपाटे तु निराश्रया: केचिदायन् पाकिस्थानतो वसन्ति च महाराणाप्रश्रये । अस्मद्राज्ये नाद्यावधि निराश्रया अभ्यायन् । मेदपाटदेशादायातेभ्यो लोकेभ्य: कर्णपरम्परया नानाकथा: श्रूयन्ते निराश्रयसम्बन्धिन्य: परं न ता नवीना अश्रुतपूर्वा वा । स्युर्यदि काश्चन लेखयोग्या वार्ता विषयेऽस्मिंस्तर्हि नूनमहं लिखिष्यामि ।

अस्मन्महाराजानां राजतोत्सवाभिनन्दनग्रन्थो नाद्यावधि मुद्रित: । देशे यवनोत्पातविघ्नैरेतत्कार्यं किंचिदवरुद्धमिव तिष्ठति । परं वयमत्र कार्यकरा: सावधाना: शीघ्रमेव ग्रन्थं प्रकाशयितुकामा: स्म: । सम्भाव्यते, यदचिरादेव ग्रन्थ: प्रकाशमेष्यति । श्रीमतां मधुरवाणी सम्पादकानाँ गलगलीरामाचार्याणां, भवतां च लेखास्तत्र ग्रन्थे स्थानमवाप्स्यन्ति । क्षम्यतां विलम्ब: । अन्यत् कुशलम् ।

भावत्क:—

गणेशराम श र्मा

अथास्मात् पत्रादनन्तरमेकं पत्रं जनस्यास्य

सविधे प्राप्तमभूत् । तदपि विलोकनार्हम् । तथाहि—

मधुरवाणी कार्यालयः,
बेलगांव (कर्णाटक)
२९–१-४८

श्रीमत्सु प्रियसुहृत्तमेषु प्रेमपूर्वेयमभ्यर्थना श्रीमतां मस्तिष्कग्रन्थिविषयको लेखोऽवश्यं माघांके प्रकाशयिष्यते। मधुरवाणी भिन्न भिन्न विषयप्रकाशनेऽतीव प्रीतिमावहतीति धन्यवादान् वितरति च, द्वादशे वर्षे नवममकं गते मासे प्रकाश्य सुरसरस्वतीं अप्रीणयदेव । सम्प्रति द्वादशवर्षं मुत्प्राप्तमेव दशमकं पुष्यमासीयं ह्वी, पी द्वारा प्रेषितवती। त्वरया तमकं दत्वांगी क्रियताम् । प्रहर्षयत्येव भवत इति द्रढीयान् विश्वासः। श्रीमत्सु आत्मीयभावना वैशिष्ठ्यात् एवं प्रवृत्ता वाणी, चैत्रे वसन्तांकं नाम विशिष्टं बहुपृष्ठदृष्टं अतिशयसुंदरं बृहदाकारं पुस्तक प्रकाशयितुं निश्चितवती, तदर्थं तत्रभवतामपरो लेख एकः अत्यवश्यं प्रेष्य इत्यभ्यर्थना, भवत्प्रकाश्य पुस्तकं प्रकाशितं न वा निवेदयंतु, प्रकाशितं चेद्भवतः प्रेषयत्येव, अस्तां स्नेह वृद्धि ।

श्रीमतकः
बुर्ली श्रीनिवासाचार्यः

अथातः परं श्रीगलगलीरामाचार्यवर्याणाम् मधुरवाणीसम्पादकानां पत्रमेकं मयोपलब्धम् यस्मिन् बुर्लीश्रीनिवासाचार्यमहाभागानां निधनस्य दुस्सम्वादो लिखितोऽभूत् । तत्पत्रमित्थंविधमास्तेः—

मधुरवाणीकार्यालयः,
बेलगांव (कर्णाटक)
ताः ७-७–४८

श्रीमत्सु महाभागेषु सविनयं सादरं साभिवादसहस्त्रं च विज्ञापनम्। प्राप्तं भवदीयं पत्रम्। परं निवेदयितुं चेखिद्यते चेतः 'चिरसहकारिणोऽस्मत्प्रियसुहृदः श्री बुर्लीश्रीनिवासाचार्या अतीत वैशाखकृष्णद्वादश्यां जलोदररोगेण वैकुण्ठलोक गता इति। सर्वथा अनाथा संजाता मधुरवाणी। असहायोऽस्मि संवृत्तः । ऋणभारभुग्या मधुरवाण्याः साहाय्यधनसंग्रहार्थं मासात्पुरा विजयपुरं गतोऽहं पञ्चषदिनस्यः प्रागत्राहमागमम्। सर्वोऽपि भारो वृद्धे मयि निपतितः तथापि भवादृशामव्याजप्रणयभाजां करावलम्बनप्रत्ययेन महत्तरेऽस्मिन्पत्रिकासम्पादनकर्मणि प्रवृत्तोऽहम् । भवादृशां महानुभावानां करुणातारिरेव शोकार्णवनिमग्नां मधुरवाणीं तारयेदिति द्रढीयान्न प्रत्ययः। भवदन्तेवासिना वसन्ताऽङ्को लब्धो न वेत्यावेदनीयम् । प्रेषयिष्यते । रूप्यकचतुष्टयेनैवालं तस्य। प्रचीयतां प्रेमातिशयः।

— गलगलीरामाचार्यः

पत्रेणानेन मधुरवाणी प्रतिष्ठापकानाम, तत्सम्पादकप्रवराणां बुर्ली श्री निवासाचार्यमहाभागानां निधनसम्वाद ज्ञात्वा मयि का नु बत प्रतिक्रिया बभूवेति निम्नलिखितात् पत्राज्ज्ञातुं शक्यते—

श्री महारावल-हाई-स्कूल,
डूंगरपुर (राजपूताना)
ता० १३-७-४८

अयि मान्या मनीषिप्रवराः
श्रीमन्तो गलगलीरामाचार्यवर्याः
मधुरवाणीप्रधानसम्पादकाः।
सादरं सविनयं च नमस्काराः।

भगवन् ।

भवत्करकमलाङ्कितं पत्रमलभे। मान्यानां मधुरवाणी सम्पादकानां श्री बुर्लीश्रीनिवासाचार्यवर्याणामाकस्मिकं निधनमाकर्ण्य व्यदीर्यत हृदयं नः शतधा। इमे महाभागा वर्षचतुष्टयादस्मत्परिचयमागताः। अत्युद्भटा विद्वांसः प्रखरशेमुषीका अपीमे सरससरलहृदयाः कुलीनाः सुरभारतीसेवनैकदृढ़व्रता नानागुणगणगरीयांसः सन्तो महान्तश्चासन् । एतेषां निधनेन न केवलं मधुरवाणी कुटुम्बस्यैवापितु समग्रस्य संस्कृतसाहित्यविद्वत्समाजस्य काप्यपूरणीया महती क्षतिरजायत। नूनमत्र वयमपि महतीं व्यथामनुभवामः । परन्तु नियतेर्नियमान् कठोरानाकलय्य पार्थिवशरीरस्य च क्षणभङ्गुरतां मन्यमाना दैवायत्तेऽस्मिन् वस्तुनि स्वस्यासामर्थ्यं स्वीकुर्वाणाः स्वर्गतानाममीषां पण्डितप्रकाण्डानामाध्यात्मिकीं शांति परमेश्वरादभ्यर्थ-

यामहे, तत्कुटुम्बिनो मित्राणि सुहृदः प्रति च हार्दिकीं समवेदनामावेदयामः।

यद्यपि मधुरवाणीदानीं स्वसम्पादकविरहेण महान्तं क्लेशमनुभवति, परमाशास्यते, भवादृशां महामहिमशालिनां विद्वत्तल्लजानां तत्त्वावधाने स्वजीवनं निरामयं क्रमविकाशपरमुत्तरोत्तरमुन्नतिशीलं च परिपालयिष्यति। विद्यमानेषु भवादृशेषु विद्वद्धुरीणेषु न किमप्यपहीयते मधुरवाण्यास्तत्कुटुम्बस्य च। वयमत्र मधुरवाण्याः ससेवने पूर्वतोऽप्यधिकमुत्साहात्तां सेवितुं प्रयतिष्यामहे। अस्मद्योग्यां सेवां नूनं विलिख्याज्ञापयन्तु। श्री निवासाचार्यं तु न वयं विस्मर्तुं पारयामः। अमीषां कृते मधुरवाण्यां तच्चरित्रवर्णनपरा लेखाः कविताश्च प्रकाश्यन्तां यथासमयम् साधूक्तम्—

"सिद्धो योगीश्वर इवसदाध्यात्मविद्याप्रवीणो
वाग्मी शास्त्रेष्वविहतगतिः क्रान्तदर्शी गुणाढ्यः।
यो मर्मज्ञः कलितकविताकामिनीबल्लभोऽभूत्
सोऽयं विद्वानहह ! सहसा स्वर्गतः श्री निवासः।१"

इत्यतावत्पर्यन्तं श्रीनिवासाचार्यसम्बन्धी पत्रव्यवहारोऽस्माकं यथा बभूव स पाठकेभ्यो-विनिवेदितः। एतस्यां जिज्ञासायामन्येषामपि संस्कृतपत्रकाराणां केषाञ्चन सम्पादकप्रवराणां पत्रव्यवहारमपि च प्राप्तावसरं निवेदयिष्यामो वयमिति शम्।

भारतीयेतिहासस्यैकोज्ज्वलः पृष्ठः

# स्वाधीनतायाः वेदिकायाम्

भगवान्शरण भारद्वाजः 'प्रदीपः'



पञ्चदश शताब्दी। देवगिरि एकं लघु हिन्दुराज्यमासीत्। तस्य शासक आसीद्रामदेवः। देवगिरौ अलाउद्दीनस्य वक्रदृष्टिरासीत् तथापि रामदेवस्य शक्तिमत्त्वात् राज्यमिदमुन्नतमस्तकं तस्थौ। रामदेवस्यैकात्मजा आसीत्—गौरी। द्वितीया च पालिता कन्या—वीरमती। वीरमत्याः जनको देवगिरेः शत्रुभिर्युद्ध्यमान उपरतः। तस्याः माता तु पितुः पूर्वमेव स्वर्गं ययौ। ततः प्रभृति राज्ञा सा दुहितृनिर्विशेषं पालिता।

यदा सा पञ्चदशे वर्षे प्रविवेश तदा तस्याः वाग्दानं महाराष्ट्रतरुणेन कृष्णरावेण सह बभूव। तस्याः पराक्रमकथाः परितः प्रसृता आसन्। तस्मिन् शौर्यसौन्दर्ययोः सङ्गमोऽभूत्। वीरमत्या सहर्षं स एव वृतः किन्तु सा न अवागच्छत् यत् कृष्णरावो यादृशश्शूरस्तादृश एव कृष्णहृदयोऽपि।

  

वीरमत्याः विवाहस्य सज्जा भवन्त्यासीत्। तदैव अला-उद्दीनाख्यम्लेच्छभूपतेः गृध्रदृष्टिः देवगिर्युपरि पपात। स सन्देशपत्रं प्रेषयत् यद्रामदेवस्तस्याधिपत्यं स्वीकरोतु। शूराः कदापि दास्यं न स्वीकुर्वन्ति। ते दासत्वाद् प्राणहानिं गरीयसीं मन्यन्ते।

'स्वातन्त्र्यन्तु क्षत्रियाणां जीवितम्। तद् विहायास्माकमस्तित्वमेवाजागलस्तनवत् निरर्थकम्। स्वाधीनतायाः सुरक्षार्थं स्वरक्तस्यान्तिमबिन्दुपातपर्यन्तं युद्धं करिष्यामो वयमित्युत्तरं रामदेवेन प्रेषितम्।

म्लेच्छेन्द्रोऽपारबलं नीत्वा दुर्गोपर्याक्रमणञ्चकार। तस्य प्रतिकारार्थं स्वातन्त्र्यप्रियाणां तरुणानां गुल्मा स्सन्नद्धाः बभूवुः। तेषु कृष्णरावोऽप्यासीत्। यदा स रणाङ्गणं प्राचलत्तर्हि वीरमती

तं मधुरस्वरेणावादीत् 'स्वाधीनता सर्वेभ्यो महीयसीति कदापि न विस्मरणीयम्।'

'त्वत्तोऽपि ?'

'आम्, स्वतन्त्र्यरक्षणाय मादृशीनामसंख्यानां ललनानां बलिदानस्यावश्यकतास्ति।'

कृष्ण रावो युद्धभूमिं गतवान्।

भीषणं युद्धमभूत्। जयश्रीः रामदेवमलञ्चकार। म्लेच्छध्वजिन्यः प्रतिनिर्वर्तितुं प्रवृत्ता अभवन्। हिन्दुसैनिका हर्षोत्फुल्लास्सञ्जाताः। सैन्यशिविरे विविधोत्सवानामायोजनमभवत्।

रजन्यामकस्मादेव धूर्तशिरोमणिना पापात्मना अलाउद्दीनेन पुनराक्रमणं कृतम्। दुर्गे तीव्रतरतूर्यनिनादोऽभवत्। क्षणार्ध एव सैनिकाः बद्धपरिकरासञ्जाताः।

'अस्माभिस्सह केनापि विश्वासघातः कृतोऽस्ति। का चिन्ता मरेण रणे ? वयं राजपूतास्स्म। युद्धन्त्वस्माकं नैसर्गिकी क्रीडाऽस्ति। प्रणास्तृणाग्रजलबिन्दुसमाः। तेषां चिन्तया किम् ? मरण भीत्या न दैन्यं न पलायनम्। कुतो नः प्राणमोहः ? वयममृतपुत्राः स्मः। नास्माकं जननं न च मरणम्। स्वगौरवरक्षार्थं वयं प्राणपणेन योत्स्यामहे।' रामदेवः स्वसैन्यं सम्बोधयन्नाह।

'नूनं वयं सपत्नान् जेष्यामः।' सैनिका 'हर-हर-महादेवे' ति जयकारञ्चक्रुः। कृष्णराव एव तूष्णीमतिष्ठत्।

त दृष्ट्वा रामदेव उवाच—'भद्र, कथं तूष्णीं तिष्ठसि ?'

'श्रीमन्नहं नीतिविहीनं शौर्यं श्वापदचेष्टितं मन्ये। केनापि प्रकारेणेदं ज्ञातव्यं यच्छत्रुसैन्यं कियत्परिमाणं, तेन समं कियत्परिमाणं रसदञ्च ?'

शत्रुसैन्यं गत्वा तथ्यमिदमवगन्तुं कः सक्षमः।

'आज्ञापयन्तु मामत्र भवन्तः।' कृष्णरावोऽपृच्छत्।

  

'युवक, त्वपरामर्शानुरूपमेव वयमाक्रमणं कृतवन्तःस्मः। इयदेव ज्ञातव्यमवशिष्यते यद् दुर्ग प्रवेशाय यस्सुगमो मार्गः ?'

'सेनापते, दुर्गं प्रवेष्टुं .... ......... .... ' लतागुल्मात्सहसोत्प्लुत्य शस्त्रसज्जः कोऽपि कृष्णारावस्य वक्षसि खड्गाग्रं प्रावेशयत्। सेनापतिरश्वमारुह्य पलायनञ्चक्रे।

भूमिश्शोणितावलिप्ताऽभवत्। कृष्णरावो भूमौ पपात। चक्षुषी उन्मील्य पुरः स्थितं युवानं परिचिन्वन्नाह 'प्रिये !'

'मा मां प्रिया शब्देन दूषय। पराधीनतैव ते प्रिया' पुरुषवेशधारिणी वीरपत्नी प्रत्युवाच।

कृष्णराव आचचक्षे 'अस्मि देशद्रोही तथापि तव ..........'

'तदहं जानामि।'

द्वौ शवौ तत्र जनैः दृष्टौ।

---

# संस्कृतविदुषां सम्मानम्

१९६६ वर्षस्य स्वतन्त्रतादिवसोपलक्ष्ये भारतस्य महामहिमः राष्ट्रपतिमहाभागः निम्नाङ्कितसंस्कृतविदुषः सम्मानोपाधिनाऽलंकृतवान्।

श्री प्रतापराय मोहनलाल मोदी, डा० श्री वी. वी. मिराशी, श्री कोलुरु सोमशेखरः शास्त्री, श्री वी. आर. श्री निवासतताचार्यः आचार्य, विश्वबन्धुः, शास्त्री, श्री क्षेत्रेश चन्द्र चट्टोपाध्यायः।

दूरभाष: २२६१३१



अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य

# स्वर्णजयन्तीसमारोहः

( २,३,४ अक्टूबर:' १९६६ )

केन्द्रीयकार्यालयः, शक्तिनगरम्, दिल्ली-७



प्रियमहोदया:,

अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य स्वर्णजयन्तीसमारोहः सम्मेलनस्य भूतपूर्वसभापतीनां स्वर्गीयप्रधानमन्त्रिणां श्रद्धेयश्रीलालबहादुरशास्त्रिणां जन्मदिवसे २ अक्टूबर १९६६ तिथौ तैर्विहिता: सेवा: प्रति श्रद्धाञ्जलिप्रदानार्थं माननीयानां सम्मेलनाध्यक्षाणाम् भारतप्रधानमन्त्रिणां श्रीमतीनाम् इन्दिरागांधीमहाभागानां सभापतित्वे नईदिल्लीस्थिते विज्ञानभवने प्रारप्स्यते। अस्य समारोहस्य समारम्भं महामहिमानो भारतस्य राष्ट्रपतयो डाक्टरराधाकृष्णमहानुभावाः करिष्यन्ति।

अनेन समारोहेण समं विविधाः परिषदः, नाट्यसमारोहः, संस्कृतकविसम्मेलनम्, विशिष्टाऽभिभाषणमाला चेत्यादयः कार्यक्रमा अप्यायोजिताः सन्ति। सर्वोऽपि कार्यक्रमः समपेक्षितानि सूचनान्तराणि चानेन पत्रेण संलग्नानि विद्यन्ते।

आशास्महे यदत्र भवन्तः संलग्नं कार्यक्रमं सूचनान्तराणि चानुसृत्य समारोहे भागं ग्रहीतुमनुग्रहीष्यन्तीति।

विनीता:

फतेहसिंहरावगायकवाडः
संसत्सदस्यः, बड़ौदामहाराजः
(स्वागताध्यक्षः)

चे० रा० पट्टाभिरामन्
भारतविधिराज्यमन्त्री
(कार्यवाहक: सभापतिः सम्मेलनस्य)

आदित्यनाथझा
दिल्लीमुख्यायुक्तः
(कार्यवाहक: स्वागताध्यक्षः

गिरधारीलालमेहता
समाजसेवक उद्योगपतिः कलकत्ता

ब्रजमोहनः
दिल्लीनगरनिगमनायकः

विश्वम्भरदत्तभट्ट
निर्देशकः दिल्लीशिक्षाविभागस्य

मन्त्रिणः — समारोहस्वागतसमितेः

उत्तरापेक्षी — डा० मण्डनमिश्रः, महामन्त्री, अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य।

## स्वर्णजयन्तीसमारोह-कार्यक्रमः २ अक्तूबर १९६६ दिनाङ्के

प्रातः १० वादने—स्वर्णजयन्तीसमारोहस्योद्घाटनं महामहिमराष्ट्रपति डा० राधाकृष्णमहानुभावैः, भारतप्रधानमन्त्रिण: सम्मेलनाध्यक्षायाः श्रीमत्या इन्दिरागान्धिमहाभागाया: सभापतित्वे सम्पादयिष्यते ।

प्रातः ११-३० वादने—'भारतीयभाषासाहित्येषु संस्कृतभाषासाहित्यप्रभावः' इत्यत्र विषये विचारगोष्ठी ।

संयोजकः—श्री भगवान्दत्तः शास्त्री "राकेशः"

(अखिलभारतीयसंस्कृतसाहित्यसम्मेलनसंयुक्तमन्त्री)

सायम् ३ वादने—वेदपरिषद्—उद्घाटकः—डा० सम्पूर्णानन्दः, राजस्थानराज्यपालः

अध्यक्षः—आचार्यः श्रीपट्टाभिरामशास्त्री, कालिकातायाः

संयोजकः—डा० देवराजचानना, दिल्लीविश्वविद्यालयस्य

दर्शनपरिषद्—अध्यक्षः—महामहोपाध्यायः, डा० उमेशमिश्रः, प्रयागस्य

संयोजिका—डा० एस्तरसोलोमना, गुजरातविश्वविद्यालयस्य

ज्योतिषपरिषद्—अध्यक्षः—पद्मभूषणम्, डा० सूर्यनारायणव्यासः, उज्जयिन्याः

संयोजकः—डा० गिरधारीलालगोस्वामी, दिल्ल्याः

तन्त्रपरिषद्—अध्यक्षः—आचार्यः डा०हजारीप्रसादद्विवेदी, पञ्चनदविश्वविद्यालयस्य

संयोजकः—श्रीरुद्रदेवत्रिपाठी, मालवमयूरसम्पादकः

व्याकरण-भाषाशास्त्र-परिषद्—उद्घाटकः—श्री के. माधवकृष्णशर्मा, राजस्थानसंस्कृतशिक्षा-निदेशकः,

अध्यक्षः—डा० प्रबोधपण्डितः दिल्लीविश्वविद्यालस्य

संयोजकः—डा० सत्यव्रतः, दिल्लीविश्वविद्यालयस्य

पुराणेतिहासपरिषद्—अध्यक्षः—म० म० श्रीदत्तोवामनपोतदारः, पुण्यपत्तनस्य

संयोजकः-श्रीअमीरचन्द्र शास्त्री, दिल्लीसंस्कृतविद्यापीठस्य

साहित्यपरिषद्—उद्घाटकः—श्री ल० ओ० जोषी संयुक्तशिक्षासचिवः

अध्यक्षः—प्रो० को० सुब्रह्मण्य अय्यरः

संयोजकः—डा० रामचन्द्रद्विवेदी, दिल्लीविश्वविद्यालयस्य

आयुर्वेदपरिषद्—अध्यक्षः—पद्मभूषणम् पं० श्रीशिवशर्मा, सम्मान्यः परामर्शदाता—योजनाऽऽयोगस्य, अध्यक्षश्च अखिलभारतीयआयुर्वेदमहासम्मेलनस्य ।

संयोजकः—श्रीप्रेमशङ्करशर्मा—निदेशकः - राजस्थानीयायुर्वेदविभागस्य

राजशास्त्रपरिषद्—अध्यक्षः—पद्मभूषणम्, पं० राजराजेश्वरशास्त्री वाराणसेयसंस्कृतविश्वविद्यालयस्य

संयोजकः—डा० दशरथशर्मा, जोधपुरविश्वविद्यालयस्य

संस्कृतशिक्षापरिषद्—उद्घाटकः—श्रीभक्तदर्शनः, भारतोपशिक्षामन्त्री
अध्यक्षः—श्री क्षे. च. चट्टोपाध्यायः, वाराणस्याः
संयोजकः—श्रीरामनरेशमिश्रः, वाराणस्याः

संस्कृतपत्रकारितापरिषद्—उद्घाटकः—म. म. परमेश्वरानन्दशास्त्री, दिल्ल्याः
अध्यक्षः—श्री अनन्तत्रिपाठी, संसत्सदस्यः
संयोजकः—आचार्य श्रीदिवाकरदत्त शास्त्री, शिमलायाः

जैनबौद्धदर्शनपरिषद्—उद्घाटकः—डा० पी० एल० वैद्यः
अध्यक्षः—पं० बेचरदासः, अहमदाबादस्य
संयोजकः—डा० रामचन्द्रपाण्डेयः, दिल्ली वि० वि०

ललितकलापरिषद्—अध्यक्षः—डा० द्विजेन्द्रनाथशुक्लः, पंजाबविश्वविद्यालस्य
संयोजकः—श्रीराजेन्द्रद्विवेदी, शिक्षामन्त्रालयस्य

पाण्डुलिपिपरिषद्—अध्यक्षः—डा० गौरीनाथः शास्त्री, कालिकातायाः
संयोजकः—श्रीस्वामिनाथः, क्यूरेटरः' नेशनललायब्रैरी नेपालस्य

सायम् ५ वादने—संस्कृतस्यान्तरराष्ट्रियमहत्त्वमधिकृत्य विचारगोष्ठी
अध्यक्षः—श्रीगजेन्द्रगड़करः, भूतपूर्वसर्वोच्चन्यायाधीशः

६ वादने—नाट्यसमारोहः—उद्घाटकः—महामहिमश्रीयदुनाथखनालः भारते नेपालराजदूतः

## ३ अक्टूबर १९६६ दिनांके

प्रातः ९ वादने—विभागीयाः परिषदः

११ वादने—विषयनिर्वाचिनी-सभा-अध्यक्षः-श्रीमौलिचन्द्रः शर्मा अ, भा. संस्कृत-सम्मेलनोपसभापतिः

सायम् ३ वादने—विभागीयाः परिषदः

५ वादने—साधारणमधिवेशनम्-अध्यक्षः-श्रीबलिरामभगतः, केन्द्रीयवित्तराज्यमन्त्री

७ वादने—नागरिकाभिनन्दनम्—दलनायक—श्री चे० रा० पट्टाभिरामन्, केन्द्रीय-विधिराज्यमन्त्री, सम्मेलनकार्यवाहकसभापतिश्च

९ वादने—संस्कृताभिनयः

## ४ अक्तूबर १९६६ दिनांके

प्रातः ९ वादने—विभागीयाः परिषदः

११ वादने—साधारणमधिवेशनम्—अध्यक्षः- श्रीरामचन्द्रमार्तण्डहाजिरनवीसः
भू. पू. केन्द्रीयसांस्कृतिककार्यमन्त्री

सायम् ४ वादने—शारदीयज्ञानमहोत्सवस्योद्घाटनम्
(अखिलभारतीयसंस्कृतविद्यापीठस्य तत्त्वावधाने)
उद्घाटकः—श्री एम. सी. चागलामहोदयः,

६ वादने—अधिवेशन-समापनसमारोहः

६ वादने—अखिलभारतीयसंस्कृतकविसम्मेलनम्

अध्यक्षः—लोकनायकः श्रीमाधवहरिकृष्णअणे, संसत्सदस्यः

महेन्द्रदवे

कार्यक्रमसचिवः सम्मेलन-संयुक्तमन्त्री च ।



ओरिऐण्टल कान्फरेन्स, अलीगढ़

अ० भा० प्राच्यविद्या–परिषदः २३ तमम् अधिवेशनम् अलिगढ़नगरे आक्टोबर मासस्य २७–२८–२९ दिनांकेषु आयोजितम् अस्ति । तदर्थं सदस्यता सम्पादनीया शीघ्रम् एव । डा. सूर्यकान्त महोदयः' अलीगढ़–मुस्लिम–विद्यापीठस्य संस्कृतविभागप्रमुखः स्थानिक-कार्यवाहः वर्तते । तत्सकाशात् सर्वम् आवश्यकं वृत्तं प्राप्तव्यम् ।

## शोकाश्रुविन्दवः

संस्कृत-परिषद्, अलीगढ़ – समायोजितमिदमधिवेशनं विश्वविश्रुतप्रकाण्डपण्डित श्री गिरिधर शर्मणश्चतुर्वेदस्य निधने नैजं हार्दिकशोकं प्रकटीकरोति ।

पण्डितप्रवरो गिरिधरशर्मचतुर्वेदः संस्कृताध्ययनस्य पुरातनीं परम्परामतितरा मरक्षत समवर्धयच्च । शास्त्रेषु हि सकलेषु तस्य साभिज्ञता व्यराजत यया प्राचीनं पाण्डित्यं सर्वथैव श्वसितिस्म । समाजाभ्युत्थाने सः पण्डित मदनमोहन मालवीय महाभागैः सह कार्यं विधाय अवनतां जातिं धर्मान्तरावलम्बिहस्तेभ्यो त्रायत । वैदेशिकमांग्लशासनं महामहोपाध्याय इत्येतदुपाधिनालङ्कृत्य सभाजयतिस्म । विद्वद्धोरेयो देशस्यास्य ज्ञानचयनपद्धते विकासने प्रसारणे च सततं यतमान एव ।

इदम अधिवेशनं चतुर्वेदविद्वन्मूर्धन्यस्य दिवगंत आत्मा शान्तिं लभेत किंच तच्छोक सन्तप्तस्तदीयः परिवारो धैर्य मिति भगवन्तं परमेश्वरं प्रार्थयते ।

---

संस्कृत- परिषद्, अलीगढ़ इत्येतदभिधानायाः संस्थायाः इदम् अधिवेशनं विश्रुत–विदुषो डा० वासुदेव शरण अग्रवालस्य निधने हार्दिकशोकं प्रकटीकरोति ।

भारतीयसंस्कृति--कलेतिहासानां प्रचारणे प्रसारणे च डा० अग्रवाला नैजं महत्वपूर्ण स्थानं निदधातिस्म । स ज्ञानविज्ञानयो जंगमविश्वकोष आसीत् । संस्कृतवाङ्मयमसौ राष्ट्र भाषायां हिन्द्या सरलया सुबोधया च शैल्याभिव्यानक् । डा० अग्रवाला वाराणसी विश्वविद्यालये पुरातत्वविभागस्याध्यक्षापदमलङ्कुरुतेस्म । हिन्दीसंस्कृतानुसन्धानक्षेत्रस्य सः अद्भुतो निष्णातनिर्देशकः पण्डितश्च आसीत् ।

मातुर्भारत्याः सुयोग्यस्य सुतस्य अग्रवाल डाक्टरस्य निधनाज् जातायाः क्षतिः पूर्ति र्वस्तुतः सम्भवा न ।

इदमधिवेशनं डा० अग्रवालस्य दिवगंत आत्मा शान्तिं तच्छोकसन्तप्तश्च तदीयः परिवारो धैर्यं लभेत इत्येतद्धरिं प्रार्थयते ।



# सम्पाचारः





## दिल्ली राज्यस्योपराज्यपालः

परमहर्षस्यायं समाचारोऽस्ति यत् संस्कृतस्य विश्वविश्रुतो विद्वान् श्री डा० आदित्यनाथ झा महाभागः दिल्ली राज्यस्य उपराज्यपालपदे प्रतिष्ठापितोऽभूत्।

## संस्कृताध्यापकानां सम्मानम्

अस्मिन् वर्षे भारतीयसर्वकारेण संस्कृतविद्यालयानां नवसंख्यकेभ्योऽध्यापकेभ्यस्तेषां प्रशंसनीयसेवाकृतेऽध्यापकदिवसोपलक्ष्ये राष्ट्रियपुरस्कारप्रदानं कृतम्। तेषां निर्वाचनं जातम्। एते पुरस्काराः ६६-६७ वर्षस्य कृते सन्ति। प्रत्येकाध्यापकाय योग्यता प्रमाणपत्रं ५०० रु० मितं च धनमपि दास्यते। एषु संस्कृताध्यापकेषु पञ्चाम्बु प्रदेशात् दिव्यज्योतिषो हितचिन्तकः तथा परमसंस्कृतसेवकः आचार्य श्री विश्वनाथ महाभागो निर्वाचितः यस्य चित्र-मागामिनि-अङ्के जीवनचरितसहितं प्रकाशयिष्यते। एष महाभागः श्री सरस्वती संस्कृत महाविद्यालये खन्नानगरे प्राचार्यत्वेन सुरभारतीसेवारतः।

## गावो राष्ट्रस्य जीवनम्

२४-८-१९६६ दिनाङ्के बम्बई नगरस्य षण्मुखानन्दभवने "सम्पूर्णगोरक्षा-अनुरोध समिति", इत्यस्याः संस्थायास्तत्वावधाने एका विशालसार्वजनिकसभा श्री १०८ स्वामी गंगेश्वरानन्द महाभागानां सभापतित्वेऽजायत। सभायां महात्मा तुकड़ोजी तथा माननीय श्रीगुरु म० स० गोलवलकर स्तथान्येऽनेकमहापुरुषाः स्वभाषणेषु भारते गोहत्याविरोधकर्तुं सर्वान् भारतीयान् प्रेरितवन्तः।

## संस्कृतछात्रानुसन्धानछात्रवृत्तयः

परम्परागतसंस्कृतपाठशालाछात्रेभ्यः अनुसन्धानछात्रवृत्तिप्रदानयोजनान्तर्गतं भारतसर्वकारेण ४१ छात्राणां निर्वाचनं कृतम् येषां नामानि निम्नप्रकारेण सन्तिः—

रामचन्द्राचार चतुर्वेदी, कौडुर कृष्ण जौइस, एन० ए० यज्ञवर, नवलपक्कम रामानुजम, नवलपक्कम वार्दाचार्यर, सुधाकर गनपत जोशी, अयोध्यानाथ चतुर्वेदी, बैंकुठ प्रिया दास, धनराज शर्मा, गोपीकृष्णा द्विवेदी, जगदीश शर्मा, नन्दकिशोर गौतम, रवीन्द्रकुमार नागर, रजनीकान्त झा, सीताराम शास्त्री गौत्रीय, सुदर्शनदेव आचार्य, जयशंकर लाल त्रिपाठी, पुष्पावती, प्रेमानन्द झा, पीताम्बर झा, रंगनाथ पांडेय, राजेन्द्र प्रसाद दुवे, राधावल्लभ त्रिपाठी, सूर्य देव पांडेय, सूर्यकान्त झा, शिवनाथ चतुर्वेदी, व्यासदेव ओझा, नरेश झा, स्वामी आत्मानंद, प्रज्ञादेवो, राम किशोर शुक्ल, लक्ष्मण प्रसादः, सूर्यप्रसाद मिश्र गणेशप्रसाद मिश्र, सुशील चन्द मिश्र, त्रियुगी द्विवेदी, नंद किशोर पांडे, वैद्यनाथ सिंह शर्मा, मधुकर पाठक, हरिपालः द्विवेदी स्वामी रामपाल सिंहः ।

**प्रस्ताव :** संस्कृत—परिषद् अलीगढ़—तत्वावधाने आयोजितस्यास्याधिवेशनस्य दृष्ट्या
कोठारी आयोगः भारतीयतायाः प्राणभूतां संस्कृत—भाषाम्प्रति न्यायं न
कृतवान् । संस्कृतविश्वविद्यालयस्य साम्प्रतं नोपादेयत्वमित्येतत् तदीयमुदीरणं, संस्कृतभाषाया
अरबी भाषायाः कोटी समारोपणं किञ्च त्रिभाषा सूत्रे संस्कृतभाषायास्तदनुरूपे महत्वपूर्णस्थाने
प्रतिष्ठापनमित्येतत्सकलं तदीयं कार्यजातमायोगीयमनोभावस्योपेक्षामयत्वं च विनिगमयति ।
तस्मात् परिषद इदमधिवेशनं भारतीयं शासनं साग्रहं साक्रोशञ्च निवेदयति यत् तद् भूयः आयोगस्य
संस्कृतविषयकं विचारं विभावयेत् ।

— रमेशचन्द्र शुक्लः मंत्री

## मध्यप्रदेशे संस्कृत-विकासोपायाः

अत्र नगरे मध्यप्रदेशस्य विभिन्नस्थानेभ्यः आगताः संस्कृतविद्वांसः पं० नन्दकिशोर शर्मा
शास्त्रिणाम् आध्यक्षे संस्कृतविकासार्थं विचारविमर्शानन्तरम् अधोलिखितान् निर्णयान् स्वीकृतवन्तः—

समाजे अद्य प्रसूतानां दुर्गुणानां मूलकारणं संस्कृत—संस्कृति- विषये ज्ञानस्य अभावः एव
यतः आदर्शभारतीय-संस्कृतेः बोधः संस्कृत-द्वारा एव भवति । अत एव च तयोः प्रचारे प्रसारे च
जनता तथा शासनम् अपि सहकार्येण समम् एव प्रयत्नशीलं स्यात् इति समुचितम् । तत्पूर्तिहेतोः
काश्चित् सूचनाः केचन उपायाः च निर्देष्टव्याः । तथा हि—१ उच्चतर माध्यमिक –विद्यालयेषु सँस्कृता-
ध्ययनं न परिहरणीयम् । २ त्रिभाषा-सूत्रे संस्कृतं समुचितं स्थानं लभेत । ३ संस्कृतविदुषां शासकीय-
सेवायां प्रवेशः आधुनिकपरीक्षां विना संभावनीयः । ४ वाराणसेय--संस्कृत--विश्वविद्यालयसदृशः
स्थापनीयः । ५ अन्यविद्यालयवत् संस्कृतविद्यालयेषु अपि आवश्यकवस्तुपूर्तिः करणीया । ६ संस्कृत-
परीक्षोत्तीर्णानां प्रशिक्षणसुविधा विधातव्या । ७ संस्कृतविषये समुचितगुणलाभेन उत्तीर्णता अनिवार्या
स्यात् । ८ अ–शासकीयाः संस्कृतप्रचारसंस्थाः अपि समुचितम् आर्थिक--सहयोगं लभेरन् । ९
गवेषणापूर्णसंस्कृतग्रन्थानां प्रकाशनं तल्लेखकानां च सम्मानः शासनेन कार्यः । १० भारते सर्वेषु
भाषाशिक्षणपाठ्यक्रमेषु संस्कृतभाषायाः अनिवार्यरूपेण प्राथमिकता तिष्ठतु ।



# शिवराजविजय—शतकम्

(गताङ्कादग्रे)

श्री हजारी लाल शर्मा



हर्म्ये स्थिता परिनिरीक्ष्य तु सिंह दुर्गं
"जीजै" कदा स्वतनयं शिववीरमूचे ।
त्वं चासि मे यदि सुतो विजयस्व दुर्गं
नोचेत् शपामि शृणुरे न मृषा वदामि ॥ ७७ ॥

राजा शिवः स्वजननी वचनानुरोधाद्
दुर्गं तु सिंहमथ जेतुमियेष कामम् ।
"तानाजी" स्वसुहृदं निजकार्यसिद्धौ
दक्षं भटं भटवरं मनसा त्वमंस्त ॥ ७८ ॥

आहूतवान् स्वजननी वचनानुबद्ध
स्तानाजितं निजजनं शिवराजवीरः ।
दृष्ट्वागतं स्वसुहृदं प्रति चाचचक्षे
दुर्गं विजित्य निजगौरवमाशु रक्ष ॥ ७९ ॥

श्रुत्वा वचः स्वसुहृदः प्रणिपत्य मित्रं
तानाभटः समकरोत् सुदृढां प्रतिज्ञाम् ।
यावज्जयो न भविता मम सिंह दुर्गे
तावद् गृहं प्रति पुन र्न निवर्तयिष्ये ॥ ८० ॥

कृत्वा स सिंह इव गर्जनमार्यवीर —
श्चाक्षोहिणी परिवृतो विजयाय यातः ।
संप्राप्य शत्रुगणदुर्गमथो निशीथे
तानाभटो निजभटान् प्रति संबभाषे ॥ ८१ ॥

वीरोऽस्ति को मम भटेषु महान् सुयोद्धा
यः सिंह दुर्गमधिरुह्य सुसाहसेन ।
ज्ञात्वाह्यरातिदलवृत्तमुदारवृत्त
आयात् स तूर्णमिति मे मनसो विचारः ॥ ८२

तानाज्ञया धृतसुसाहसकाः सुवीरा
दुर्गाविरोहणविधौ सफला न चासन् ।
अन्ते स्वयं शिवसखा सहसाऽऽरुरोह
दुर्गं ह्यरातिगणजुष्टमहोऽत्यगम्यम् ॥ ८३ ॥

तेनैव सार्धमतिसाहसमेत्य वीरा
स्तानाभटस्य सुभटा ह्यवरुह्य दुर्गम् ।
दुर्गस्थितानरब देशभवास्त्वसंख्यान्
जघ्नुः पशूनिव खलान् यवनाननल्पान् ॥ ८४ ॥

श्रुत्वाधिदुर्गमरिविप्लवजं तु घोषं
क्रुद्धो महानुदयभानुरतिप्रचण्डः ।
दक्षैर्भटैः परिवृतो बहुमांसभोजी
तानाभटेन सह योद्धुमथाजगाम ॥ ८५ ॥

सार्धं तु तेन सहसोप गतांश्च तस्य
पुत्रान् जघान तरसा ह्यसिना सुवीरः ।
"तानाभटो" भटवरो द्विरदाधिरूढः
संतापयन् युधिमनो द्विषतां दिदीये ॥ ८६ ॥

ज्ञात्वा हतानुदयभानुरथो सुतान् स्वान
धृत्वा करालपरिघं परिदीप्यमानम् ।
क्रुद्धो महाहिरिव मन्युमुपेत्य वेगात्
तानाभटं स्वपरिघेण जघान सद्यः ?। ८७ ॥

"तानाभटे" विनिहते परिवृद्धमन्यु
स्तानाभटस्य खलु मातुल आर्यवृद्धः ।
आदाय खड्गमथ "सेलरजी" बलिष्ठ
उच्चै र्जगर्ज बनसिंह इवातिदृप्तः ॥ ८८

रे दुष्ट ! पामर महाधम ! नीच पापिन् !
जाताऽधुना किमु मही सुभटै र्विहीना ।
उक्त्वेति "सेलरभटः" परिघेण सद्यः
कायादधो ह्युदयभानु शिरश्चकार ॥ ८९ ॥

सेनाधिपे ह्युदयभानु भटे हते च
सेना हता दशदिशासु गताऽतिभीता ।
इत्थं शिवस्य सुभटै र्महता बलेन
दुर्गं विजित्य विजयस्य कृतोऽतिघोषः ॥ ९० ॥

आगत्य तत्र शिवराजनृपोऽसिपाणि
स्तानाजिनं समवलोक्य भटं हतं च
संतप्यमानवदनः शिव इत्थमाह
सिंहं प्रदाय खलु सिंहल दुर्गमापि ॥ ९१ ॥

जित्वा तु सिंहल समान् बहुशः प्रसिद्धान्
दुर्गान् महान्द्ध तभटः शिवराजवीरः ।
सर्वत्र स्वां ननु विधाय च राज्य सत्ता
मार्यत्वसंस्कृतिमसौ सुतरां ररक्ष ॥ ९२ ॥

कृत्वाधिकारमथ सिंहलनाम दुर्गे
वीरःशिवो-भटवरो महता बलेन ।
जेतुं महत् सुनगरं "सुरतं" प्रसिद्धं
चैन्द्रीं श्रियं परिदधत् समुदः प्रतस्थे ॥ ९३ ॥

जित्वा समस्तनगरं सुविधाय सत्तां
स्वीयां निजेन भुजदण्डबलेन शैवः ।
मुग्लान् विहत्यच वहून् बहुमूल्य नानि
जग्राह रत्नमणिमौक्तिकभूषणानि ॥ ९४ ॥

ज्ञात्वेति वृत्तमतिकोपधरोऽवरङ्गः
सञ्जीचकार निजसैन्यदलेन सार्धम्
"दिल्लेर खान" मथ "खान महावतं" वै
योद्धुं शिवेन सह दक्षिण दिग्विभागे ॥ ९५ ॥

युद्धं महत् सुतुमुलं समभूदरीणां
"सालेर" दुर्गमधिमुग्गलपेशवानाम् ।
वीर प्रताप "पियराव" सुमित्रनीत्या
लेभे शिवः सुविजयं विनिहत्य दस्यून् ॥ ९६

"सालेर" दुर्गविजये मुगलास्त्वसंख्याः
सेनाधिपाश्च यवना निहता अभूवन् ।
वन्दीकृतास्त्वगणिताः रिपवोऽश्वनागा
नामानुमानमभवद् युधि संहतानाम् ॥ ९७ ॥

श्री वीरसिंहशिवराजकृपाणभीत
श्चौरङ्गजेवनृपति र्न जहौ स्वहर्म्यम् ।
रात्रिं दिवं त्वधिगृह निवसंस्त्रसन् स
स्वावन् पिवन्नपि चलंश्च ददर्श शैवम् ॥ ९८ ॥

दिल्लीपतिर्यवनराट् शिवराजभीत
श्चान्ते शिवेन सह योद्धुमना न जातः ।

भूमिं शशास खलु दक्षिणभारतस्य
वीरः शिवोऽपरमहीमवरङ्गजेवः ॥ ९९ ॥
राज्ञः शिवस्य शुभशासनकालमध्ये
जातो न कोऽपि विषयी न च दीर्घसूत्री ।
सर्वे जना निजनिजेप्सितकार्यसिद्धौ
सिद्धिं गता गतभया मुदिता बभूवुः ॥ १०० ॥
वीरः शिवः शिवकलांशभवोऽरिवर्गं
जित्वाधिकृत्य बहुशोऽरिगणस्य दुर्गान् ।
गोब्राह्मणार्तिहरणाय सदोद्यतो हि
ख्यातिं परामधिगतो द्विजदेवभक्तः ॥ १०१ ॥
कृत्वा स्वतन्त्रमथ दक्षिण भारतं तु
संस्थाप्यचार्यकुलसंस्कृतिमार्यदेशे ।
सप्ताधिके सुदशके शतके त्वशीति
वर्षे शिवः शिवरतः शिवधाम यातः ॥ १०२ ॥
"सीसोदियेति" शुभवंशभवस्य राज्ञो
वीरस्य राजतिलकस्य शिवस्य गाथा ।
धीरेषु राजपुरुषेषु तनोति हर्षं
प्रेम्णादृता हृदि धृता त्वधिदेवतेव ॥ १०३
यावद् दिवाकरनिशाकरयोऽस्ति तेज
स्तावत् क्षितौ नृपशिवस्य यशस्ततं स्यात्
द्वित्रा हि सन्ति भुवि ते सुभटाश्च यैस्तु
स्वाहा कृतं निज बलं निजदेशहेतोः ॥१०४॥
"शम्भा जी" तनयः शिवस्य समभूज्ज्येष्ठः
कनिष्ठःसुतो

राजाराम इति प्रशस्त गुणभाग् जातोऽनुरूपं पितुः
राजा राम सुतः प्रशस्तविधिभिः सर्वौर्द्धदेहिक्रियाः
संप्रेतस्य चकार दिव्य नगरे रामेति दुर्गे नवे १०५
यावत्सूर्य शशाङ्कयोर्भुवि ततं तेजोऽस्ति दिव्यंमहद्
यावच्चास्ति धरातलेऽमृतमयं गाङ्गं जलं यामुनम्
यावच्चात्र विभाति भारतभुवि ब्राह्मी सुधावर्षिणी
तावच्छ्रीशिवराजकीर्तिमतुलां गास्यन्ति
लोका मुदा ॥१०६॥

श्रीमर्हद् शिवस्य चारुचरितं युद्धादिगाथाञ्चितं
राज्ञां नीतिविदां कृतेऽस्ति सततं श्राव्यं सदा हर्षदम्
यद्गाथा श्रवणेन रोषभरिता सर्वार्यजनता मुदा
स्वान् प्राणानपि दातुमुत्सुकतरा वर्तत्यहो !
चापदि ॥१०७॥

उपन्यासः

# श्री सुभाषचरितम्

श्री प्रेम शंकर मिश्रः

★

(गताङ्कादग्रे)

( ७ )

मेघाच्छन्नं नभः। प्रवहति च खर-तर-स्पर्शङ्गि-लतिका-प्रकम्पनः प्रकम्पनः मध्ये मध्ये सतडतडाशब्दं विद्योतते विद्युत्। कुलद्रुमोन्मूलन-तीव्रतर-प्रवाहभीषणतामापन्ना नद्यः स्वीय-वारिपूरमादाय मद-विह्वलांग्योरत्नाकरमभिधावन्ति।

क्षुद्रतया परिगणनीय-जलाशयेष्वपि महती जलसम्पत्तिरवलोक्यते। झंझावात--प्रताडित-प्राणिवर्ग-संकुल—वंगधरित्रीकरुणचीत्कारो नभःप्रदेशं यावद् व्याप्नोति। जलेशयानामपि यत्र जीवनाशाधारणे काठिन्यं तत्र का चर्चा स्थलस्थायिनां पशु-व्रज-मानव-मण्डलानाम्। सर्वेष्वपि स्थलेषु जलप्रायतां प्रयातेषु प्रवर्षत्सु च प्रवात--सहकृतघनघटासमूहेषु दिवानिशं स्वकीयनीड़स्थिताः पतत्रिणोऽपि कणाद्यप्राप्त्या महत्या क्षुधया सन्नाङ्गाः सञ्जातमरणाशङ्काः स्वीयान् शावानुपगूह्य प्रतीक्षन्ते भास्करकरावलोकितं समयम्। कङ्करीयाश्चानवाप्य तृणादिक बुभुक्षाकुलितास्तिष्ठन्ति। मानवानां समाजस्योपरि मन्येऽनभ्रवज्र-पात एव सञ्जातस्ते हि किं कर्तव्यमूढ़ाः दुःखदावदग्धान्तराला यथासाध्यं स्वीयपशु-धन-जन-संरक्षणाय प्रयत्नमाचरन्ति। महत्सु नगरेषु धाराधरस्यानवरत क्रियाकलापेन मुख्यमार्गेष्वपि नदीप्रायतां प्राप्तेषु यातायातोऽवरुद्धः। बालकाः, स्त्रियो, वृद्धाश्च स्वीयावासेषु संरुद्धाः। दैनिककर्तव्यजाल-संनद्ध-मानव-समूहे महता कष्टेनेतस्ततः सञ्चरत्यपि-सार्वजनीनक्षेत्रेषु जीवनाभाव एव लक्ष्यते। परितः सिक्तवपुषोपि दन्दह्यमानाः, जीवनावृता अपि जीवनाशारहिताः विकरालकालकपोलान्तरालपतिताः संत्रस्ता वीक्ष्यन्ते।

ग्राम—परिसरेष्वपि वारिधरमण्डल मध्यतोऽहर्निशं समागम्य मानविषकल्पेन विषसमहेन पशुवृन्द-नर-नारी—समाजजीवनशैथिल्यं विलोक्यते। नद्यादिपरिसरस्थग्रामेषु-नगरेषुच जलधर—कालीन-जल-जलताकाण्डताण्डवेन प्रलयकाल इव समुपस्थितो-विलोक्यते। जीर्णतम—निवेशन-भूमिनिवेशनजेन भयङ्करघोषेण, घन-घोर-घर्घरारावेण, सौदामिनीदामनीतेनेन कडकडाकारेण, नद्याः कठोरतर-नादेन च कम्पमानाः मानावशिष्टाः मानवाः, अशरण-शरणैकदक्षं, सततं प्राणिवर्ग रक्षणवद्धकक्षं परमात्मानं प्रार्थयन्ते। एतादृशजीवनात्ययकारिणि जीवनात्यये समुपस्थिते प्राणिवर्ग संरक्षणवद्धभावाः केचित्महानुभावाः निरन्तरं प्रयत्नपरास्तिष्ठन्ति। यदा सर्वे जनाः स्वीयदारा-गार शरीर-बान्धवचिन्तयाकुलितचेतसस्तिष्ठन्ति। तदानीं तेऽमी मानवदेवताः जनतायाः जनार्दनत्वं निश्चित्य स्वकीयेन हृदा, संत्यक्तपरिवार-गृह-वैभव-चिन्ताः मानवता-संसेवनेन वर्द्धन्ति। प्रचुर-जन-सहयोगेन, वस्त्रान्नसङ्ग्रहं विधाय-सङ्कटापन्नस्थलेषु प्रापणाय दिवानिशं प्रयत्नमाचरन्ति।

एतादृशे महाकाल-गर्जन-तर्जन-संत्रस्तान्तराले नदी-नेदीयस्येव प्रान्तेऽवस्थिते खर्वटे कतिपय जना:स्त्री-बाल-स्थविर परिवृतास्तत्रत्योच्चतमस्थाने तिष्ठन्ति । ग्रामं परित: प्रवहमानं-नीरं-नीरवता-भङ्गं करोति । कूलंकषा गर्जन्ती नदीधारा महाट्टहास-परा विनाशमिव सर्वत: समुद्घोषयति । दिवसचतुष्टये व्यतिगतेऽद्य वारि वारितमिव प्रतीयते किन्तु नभोमण्डलावलोकनेन प्रतीयते यत्कस्मिन्नपि क्षणे पुनरपि निरन्तधारासारप्रारम्भो भवितुं शक्नोति । क्षुधा समेषामपि जनानामङ्गा-निसीदन्ति । खर-तर-समीरण-स्पर्शेन वारं वारं कम्पितदृष्टयो मानवा: दुःख-पूर्णतया परस्परं विलोकयन्ति । असहाया इतस्ततोऽवलोकयन्तो महतीं करुणां जनयन्ति ।

तदानीं समीपतरप्रदेशस्थे गगनस्पृशि तरावेकस्मिन्नारुह्य कैश्चिदालोकितम् यत्सुदूरस्थले कतिपयनौकास्तरन्ति । तेन समाश्वस्तहृदया इव तरोरवतीर्य ते वृत्तमिदं जनान्निवेदयामासुः । संत्राणावाप्तिकल्पनया हर्षाकुलितैस्तैः प्रोच्चारितया स्वकीयसंकटसूचनाहर्षध्वनिना दत्ता: नौका: । तद्दिशि एव समागच्छन्ति स्म । कोलाहलमुपश्रुत्य तीव्रतयैतद्दिशि प्रचलिता: । एतस्मिन्नेवावसरे नद तीव्रतमावातजर्जरित-मूल एकस्तरुः प्रपतनजेन घोरेण रवेण जनानां हृदयोद्वेजनं कुर्वन् नद्या प्रवाहे पतित: । कूलस्था प्रचुरपरिमाणशीलाभूरपि सधडधडाशब्दं तत्रैव पतिता । अनया घटनया मृत्युभीते-रुग्रता द्विगुणतां प्राप्ता । प्रचुरा: रोदितुमारब्धा:) एतदन्तराल एव नौका समहे समागते प्रत्यागत प्राणा इव जना अहमहमिकया तदन्तिकप्राप्तिप्रयत्नपरा जातास्तदानीं विलोक्यते स्म मानव: स्व रक्षायै सहवर्तिनो विनाशेऽपि नो कम्पते । कीदृशीयं स्वार्थपरायणता । नौका-कर्णधारैः शनैः सर्वेऽपि नौकासु स्थापयित्वा समीपवर्तिनि नगरे प्रापिता: । खर्वटस्थै: जनैर्ज्ञातम् यत्तेषामेव समानदुःख भागिन: प्रचुरा: जना: सपरिवारास्तिष्ठन्ति । सर्वेषामपि निवासाशन. वसन-व्यवस्था स्वयं-सेवक दलेन विधीयते । एकेन सुविज्ञजनेनैतदपि सूचितम् ।

"एतादृश-मानव-सेवाया आयोजनं येन दलेन विधीयते तस्य संघटना महनीयचरितेन श्री सुभाष चन्द्रवसुमहोदयेन विहिता । अन्न-धन-वस्त्रसञ्चयं विधाय दिवानिशं परिश्रम्य भारतमातुः पुत्राणां कालपाशन्मुक्तये महोदयोऽसौ सर्वदा बद्धचेष्टस्तिष्ठति । तस्य संघटने स्थिता: स्वयंसेवका: स्वा-शननिद्रा-विश्रान्ति-चिन्तां विहाय जलभीषणतया युद्ध्यन्ते । स्वीयकर्तव्यपालनगौरवं च धारयन्ति ।"

मृत्योरट्टहासेन समायातो जलाप्लवो मानवसमाजदार्ढ्यमिव विलोक्य प्रयात: परन्तु रोगगणानां सञ्चरणमिदानीं यावत्सर्वत्र भवति स्म । विविधस्थलेषु-साम्प्रतमपि जलानि पूरितानि भास्कर करस्पर्श-वर्ष-सुखिता अपि मानवा: ज्वरादिभि: पीड्यन्ते । दलस्य कार्यं साम्प्रतमपि शैथिल्येनैव विलोक्यते । वसुमहोदयानां नेतृत्वे दलेनानेन मानवताया: महती सेवा सम्पादिता । जलाप्लवसहायताकोषे श्री वसुमहोदयेन चतुर्लक्षमितद्रव्यसंचयो विहित: । संत्रस्तजनानां कृते सुरक्षाव्यवस्था औषधादि-प्रबन्धश्च सम्पादित: । महत्वपूर्णेनानेन कार्येण न केवलं वङ्ग क्षेत्रे एवापितु सर्वत्रापि भारते एतदीया महती कीर्ति: सर्वत्र प्रसृता । अस्य लोकोत्तर-पाटवेन-व्यक्तित्वेन, च सर्वेऽपि मानव-सेवा व्रतिन: प्रभाविता: जाता: ।

राष्ट्रिय महासभा नीत्या असन्तुष्टा: श्री पं० मोतीलाल नेहरू:, श्रीचितरञ्जन दास महोदया अन्ये च तदनुरूपव्यवहारा: "स्वराज्य दल" नाम सङ्घठनमायोजयामासुः तस्य मन्त्रित्वं स्वीकृत्य वसुमहोदयो दृढनिष्ठया देशसेवां कृतवान् । तैः "फार्वर्ड-ब्लाक" नाम दलीयं प्रमुखपत्रं सम्पादितम् । कार्यद्वयेनैतेन सदैव कालिकाता नगरपालिका प्रधानकार्यकर्तृ पदे च स्वीयकार्यपटुतां प्रादर्शयत् ।

ज्ञान-कर्म वैराग्यरूपां त्रिवेणीमिव कार्यक्षेत्रत्रयमपि संचालयन् श्रीवसुमहोदयो भारतसेवा परायणतया जनमनःप्राङ्गणे समधिष्ठितोऽभूत् । स्वराज्यदलीयप्रमुखपत्रे तदीयदेश-भक्ति पूरिता विचाराः जनानां हृदयेषु पारतन्त्र्य-धुरं विधुरयितुं भावानापूरयन्ति स्म । मन्त्रित्वेन तदीय क्रियाशक्तिपरिचयोऽभवत् । नगरपालिका "(चीफएक्जीक्यूटिव) पदवेतनं सहस्रात्स्वीकृत्यार्धं गृहीत्वा वित्तवैराग्यभावनोपस्थापनपुरःसरम् ।

स्वदेशीयवस्त्राणामेव परिधाननियमरचनया देशस्य विशिष्टमनुरागं समस्थापयत् । केनापि वैदेशिकशासनेन नितान्तमुत्कटदेशानुरागभावना सोढुं नैव शक्यते । गौराङ्ग शासका अपि सतर्का एव समभवन् । एतादृश्या कार्यप्रणाल्या कदा निगृह्येदिति प्रतीक्षैवासीत् । एतस्मिन्नवावसरे केनापि बङ्गदेशीय नवयुवकेन कस्याप्यांग्लाधिकारिणो यमसदनप्राघूर्णिकता विहिता । सत्वरमेव शासकानां कोपदृष्टिः वसुमहोदये पतिता । चतुर्विंशदधिकैकोनविंशत्यष्टीयाक्टूबर मासस्य पंचदश तारिकायां निगृह्य वसुमहोदया अभियोगचालनं विनैव ब्रह्मदेशस्य "माण्डले" स्थाने कारागारे प्रापिता-देशस्य समस्तेऽपि क्षेत्रेऽस्य कर्मण अनौचित्यप्रदर्शनाय विरोधोऽभवत् । तदानीमेव श्री देश बन्धुमहोदयैः प्रतिपादितम्—

"यदि जननीजन्मभूमिस्नेहोऽपराधत्वेन मन्यते तदाहं सर्वप्रथमोऽपराधी मां निगृह्य शासनं कारागारे पातयतु ।" सर्वमपीदं विरोधजातमकिंचित्करमेव संवृत्तम् । यतो हि प्रबलशक्तिमदान्धानां-पुरतोऽनुनयविनयस्य किमपि मूल्यं नैव भवति । कारागारस्य वातावरणेन नितान्त तान्त-तनु-शरीर समन्वितोऽपि वसुमहोदयो दुर्गापूजनावसरे तत्रैव पूजासम्भारमायोजयितुमैच्छत् । वैदेशिकविचारानुसारं वसुमहोदयानां पूजनकार्येऽपि किमपि रहस्यमेव प्रत्ययत् । पूजनानुमतिमप्राप्य विचार-दाढ्यनिप्रेरितोऽ नशन सत्याग्रहं कृतवान् भारते । सर्वत्रापि क्षेत्रे खेदपूर्वकमयं समाचारः श्रुतो यद् वसुमहोदयानां शरीरभारः चत्वारिंशत् "पौन्ड"-मितं ह्रासं प्राप्तः । हाहाकारः सर्वतः प्रसृतः । चिकित्सकैः परीक्षणं विधाय घोषितं यत्फुफ्फुस दौर्बल्येन राजयक्ष्मण आशङ्का-जाता । चिकित्सकपरामर्शं श्रुत्वा शासनेन पणबन्धसहिता-मुक्तिः स्वीकृता । पणबन्धश्चायमासीत्—"भवता स्वास्थ्य-सुधाराय भारतदेशे न गन्तव्यमपितु यूरोपमहाद्वीपे "स्विटजरलैंड" नाम्नि देशे वा गन्तव्यम् । पणबन्धसमन्वितमुक्ते कारागारबद्धतामेव श्रेयस्करीममन्यत सुभाषमहोदयः । कतिचित्कालात्यये जातेऽगत्या शासनेन कारागारान्मुक्ताः ।

अस्थिपञ्जरमात्रवपुषोऽस्य महाशौर्यशालिनस्तदानीं सर्वत्र स्वास्थ्यकामना कृता, कालिकाता नगरे च स्वागतसमायोजना महता हर्षेण कृता । एवं वर्षत्रयमतीतमेतस्मिनवान्तराले मार्गदर्शक-त्वेन मानितानां श्रीमतां देशबन्धु चितरंजनदास महोदयानां स्वर्लोकप्रस्थानं श्रुत्वा मनसि नितान्त दुःखमभजत् ।

पुनरपि देशसेवाव्रती, जन-गण-सौख्य-चिन्तनपरायणः श्रीवसुमहोदयोऽविरतं चरैवेति श्रुति सिद्धान्तमनुपालयन् विविधक्षेत्रेषु स्वीयकर्तृत्वशक्तियोजने प्रवृत्तः । राष्ट्रियसभायाः वंगदेशीय शाखायाः प्रधानत्वम् अखिलभारतीयराष्ट्रियमहासभायाः महामन्त्रित्वमावहन्नसौ विधानसभा (असेम्बली) सदस्यत्वेन निर्वाचितः । अखिलभारतीयराष्ट्रियमहासभायाः कलिकाता अधिवेशने समस्तमपि प्रबन्धं सम्पादितवान् ।

स्वयं-सेवकसेनायाः प्रधानरूपेण गणवेशं (वर्दी) परिधायाऽश्वारूढो वसु महोदयः राष्ट्रपति यानस्य पुरतः प्रचलन् भाविनं सेनानायकत्वमभ्यसन्नतीवरमणीयः प्रतीयतेस्म । भारतमातुः सैनिकत्वं महते गौरवायैव सम्पद्यते ।

तदनन्तरं समस्तेऽपि देशे प्रचलितान्दोलनप्रबलतामापादयन्नसौ कालिकाता नगर्यामपि वैदेशिकवस्त्राणां होलिकादहनमकरोत् ।

क्रमशः

  

## शिक्षा-आयोगः

भारतीयसर्वकारेण स्वतंत्रभारतस्य शिक्षायाः समुचितस्तरनिर्माणाय निर्धारणाय वा यः शिक्षा-
आयोगः निर्मितः आसीत् तेन संस्कृतभाषाविषये यत् प्रतिवेदनं विहितं तत्सर्वथैव संस्कृतोपहासकमेव ।
पारस्यारबीयादि-भाषाजातं भारतभूभागादायातमेवात्राङ्गलभाषावत् । या अपि भाषाः अस्माकं
देशे समायाता विदेशीयव्यापारिभिः शासकैः वा सह तासामपि सम्मानमेवास्माभिर्नूनं कृतमेव ।
परं या किल भारतीयभाषाणां जीवनाधारभूता भाषा स्यादथवा विश्वभाषाणामपि या प्रेरणादायिनी
यस्याः भारतदेशे एव चैयं दुर्दशा भवेत्तू का कथा पुनः विदेशेषु । एवमेव प्रान्तीयभाषाविषयेऽपि
ज्ञातव्यम् । अतः सुधियोऽत्र विचार्य स्वभाषागौरवरक्षार्थं सर्वदा सन्नद्धास्तिष्ठेयुः ।

## दिव्यज्योतिषो नववर्षाङ्कः



अक्तूबर मासे दिव्यज्योतिषः एकादशो वर्षः प्रारप्स्यते । अतः नववर्षाङ्कः श्रीलालबहादुरशास्त्री विशेषाङ्करूपेण प्रकाशयिष्यते । कृपालुपाठकैः अवि-लम्बं सहायता प्रेषणीया येन विशेषाङ्कप्राप्तौ सौकर्यं भवेत् ।

— सम्पादकः

# सम्पादकीयम्

## केन्द्रीयसंस्कृतमण्डलं केन्द्रीयसर्वकारश्च

केन्द्रीयसर्वकारेण यत्केन्द्रीयसंस्कृतमण्डलं परामर्शदानार्थं निर्मितमस्ति तस्य सदस्यानां वयं हृदयेन कृतज्ञाः स्मः । यतोहि तत्सदस्यैः काले २ शुभपरामर्शप्रदानेन केन्द्रीय सर्वकारस्य पथ-प्रदर्शनं विधीयते । भारतीयसर्वकारोऽपि सदस्यानां मण्डलस्य वरपरामर्शं स्वीकृत्य तं कार्यरूपं दातुं प्रयतते ।

१९६६–६७ ईशवीयाब्दस्योपलक्ष्ये भारतसर्वकारेण चिरोपेक्षितानां संस्कृतविद्यालया-ध्यापकानां राष्ट्रियसम्मानकरणं प्रारब्धं तद्धि कस्य सुरभारतीसमर्चकस्य सन्तोषाय मानाय जा न स्यादेतदर्थं मण्डलाय भारतसर्वकाराय च वयमनेकान् धन्यवादान् समर्पयामः ।

## मण्डलसदस्याः सर्वकारश्च

केन्द्रीयसंस्कृतमण्डलस्य सदस्यानां सेवायामस्माभिरिदमावश्यकनिवेदनं क्रियते यत्ते तथा प्रयासान् कुर्युः स्वप्रभावप्रयोगञ्च सम्पादयेयु र्येन केन्द्रीयसंस्कृतमण्डलसम्बद्धानि प्रतिराज्यं संस्कृतोपमण्डलानि संस्थापितानि स्युः । तानि प्रतिराज्यं संस्कृतयोजनानां सञ्चालनं सम्पादनञ्च कुर्युः । अन्यथा केन्द्रीयसर्वकारेण यत् किमपि संस्कृतप्रसाराय क्रियते तत्प्रतिकूलं प्रान्तीयसर्वकारैस्तद्विनाशाय क्रियते । यतोहि तत्र एवंविधाः अधिकारिणः समायान्ति ये संस्कृतस्य महत्त्वं स्वल्पमपि न जानन्ति । ते किल एवमेव जानन्ति यत् संस्कृतविद्वांसः केवलं भाषापूजका एव सन्ति । अतोऽधिकारिणामेतादृशे ज्ञाने सति संस्कृतोद्धारस्तत्र कथमपि भवितुं न शक्नोति । बहुषु राज्येषु संस्कृतविद्यालयाः नामशेषतामेव गताः । संस्कृतविद्यालयेषु छात्राणां संख्या अहरहः क्षीणतामेव याति । न कश्चिदपि तथाकथितनवीनोच्चसमाजस्य सदस्यः संस्कृतमध्यापयितुं स्वबालकान् प्रयतते । न चाप्यपरेषु माध्यमिकोच्चमहाविद्यालयादिष्वेव संस्कृताध्यापनस्य कश्चिदाशा-जनकः प्रबन्धः ।

अतः सदस्याः स्वप्रभावप्रयोगपुरस्सरं केन्द्रीयसर्वकारं तथा सत्पथि प्रवर्तयेयुः येन सदस्यानां प्रयासेन केन्द्रीयसर्वकारद्वारा क्रियमाणं कार्यजातं संस्कृतभाषायाः प्रसारप्रचार कर्मणि किमपि चामत्कारिकं सिद्ध्येत् ।

# Lal Bahadur Shastri Smriti Grantha

## An important publication of Sanskrit Research Institution, Simla.

Illustrated lives with a brief introduction of works of those Sanskrit Scholars will be published in it who have taken Ph. D. D. Lt. etc and Mohamahapadhyoya degree from any Indian or foreign University for Sanskrit research in any branch of Sanskrit Literature.

Contact promptly :

The Chief Editor,
Divya Jyoti Sanskrit Monthly,
Anand Lodge, Jakoo, Simla-1.

---

# लालबहादुरशास्त्री-स्मृतिग्रन्थः

## संस्कृतशोधसंस्थानशिमलायाः महत्त्वपूर्णमायोजनम्

संस्कृतशोधसंस्थानशिमलायास्तत्त्वावधाने शास्त्रिस्मृतिग्रन्थप्रकाशनस्य समारम्भः क्रियते । यैरपि संस्कृतविद्वद्भिर्भारतीयेषु भारतेतरेषु विश्वविद्यालयेषु च विभिन्नसंस्कृतविषयमधिकृत्य शोधप्रबन्धान्-निर्माय (पी. एच. डी. डी. लिट्) वाचस्पत्यादयः महामहोपाध्यायोपाधयो वाऽधिगतास्तेषां जीवितानां दिवंगतानाम्वा सर्वेषामपि सचित्रो विशिष्ट-परिचयोऽस्मिन् ग्रन्थे प्रकाशयिष्यते ।

अस्मिन् विषये विद्वद्भिस्तत् सम्बद्धैर्महानुभावैश्च दिव्यज्योति-कार्यालयेन सहाविलम्बं सम्पर्कः संस्थापनीयः ।



R. N. 6884/57 Registered No. P. 157